पञ्चदशः पाठः

# हास्य-पद्यम्

सदा वक्रः सदा क्रूरः सदा पूजामपेक्षते ।
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥१॥

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते हरिः शेते महोदधौ ॥२॥

१. **अन्वयः**- जामाता, सदा वक्रः, सदा क्रूरः, सदा पूजाम् अपेक्षते । नित्यम् कन्याराशिस्थितः, दशमः ग्रहः (अस्ति) ।

**अर्थः**- कन्यायाः पितुः कृते जामाता सदा वक्रः भवति । सदा निर्दयी भवति, सदा पूजाम्, इच्छति । नित्यम् कन्याराशिस्थितः भवति । एतादृशः जामाता दशमः ग्रहः अस्ति ।

(ससुराका निम्ति जुवाइँ सधैँ बाङ्गो हुन्छ । सधैँ निर्दयी हुन्छ । सधैँ पूजा अथवा मानसम्मान चाहन्छ । यसरी सधैँ नै जुवाइँ कन्याराशिमा रहने दशौँ ग्रह हुन्छ ।)

२. **अन्वयः**- असारे संसारे, खलु सारम् श्वशुरमन्दिरम् (अस्ति) । हरः हिमालये शेते । हरिः तु महोदधौ शेते ।

**अर्थः**- सारहीनम् संसारम् अस्ति । खलु अस्मिन् संसारे सारम् श्वशुरमन्दिरम् अस्ति । अतः एव शङ्करः हिमालये शेते । भगवान् नारायणश्च सागरे शेते ।

(तत्त्वविहीन यस संसारमा तत्त्व छ भने केवल ससुरालीमा नै छ । यसकारणले नै भगवान् शङ्कर हिमालमा सुत्नुहुन्छ । भगवान् विष्णु समुद्रमा सुत्नुहुन्छ ।)

**शब्दार्था:**

| | | | |
|---|---|---|---|
| सदा | = सधैँ | वक्र: | = बाङ्गो |
| क्रूर: | = कठोर, निर्दयी | पूजाम् | = पूजा (लाई) |
| अपेक्षते | = चाहन्छ | कन्याराशिस्थित: | = कन्या राशिमा बस्ने |
| नित्यम् | = सधैँ | जामाता | = जुवाइँ |
| दशम: | = दशौँ | ग्रह: | = ग्रह |
| असारे | = सार तत्त्व नभएको | संसारे | = संसारमा |
| खलु | = निश्चय | सारम् | = तत्त्व, सार, गुदी |
| श्वशुरमन्दिरम् | = ससुराको घर, ससुराली | हर: | = महादेव, शिवजी |
| हिमालये | = हिमालमा | हरि: | = भगवान् विष्णु |
| महोदधौ | = समुद्रमा | शेते | = सुत्दछन् |

## अभ्यास:

**१. अधस्तनम् पद्यम् लयात्मकरूपेण पठत**

सदा वक्र: सदा क्रूर: सदा पूजामपेक्षते ।
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रह: ॥

**२. अधस्तनम् पद्यम् कण्ठस्थम् श्रावयत**

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते हरि: शेते महोदधौ ॥

**३. नेपालीभाषायाम् अर्थम् लिखत**

सदा, क्रूर:, जामाता, दशम: ।

**४. संस्कृते उत्तरयत**

(क) क: सदा वक्र: ?
(ख) दशम: ग्रह: क: ?
(ग) संसारस्य सारतत्त्वम् किम् ?
(घ) हर: कुत्र शेते ?
(ङ) हरि: कुत्र शेते ?

**५. परस्परम् मेलयत**

| | |
|---|---|
| (क) हरः शेते | (क) जामाता दशमः ग्रहः |
| (ख) हरिः शेते | (ख) श्वशुरमन्दिरम् |
| (ग) कन्याराशिस्थितः | (ग) महोदधौ |
| (घ) संसारे सारम् | (घ) हिमालये |

**६. अधोलिखितान् शब्दान् प्रयुज्य वाक्यानि रचयत**

हरः, शेते, क्रूरः, अपेक्षते, पूजाम्, जामाता । (यथा- हरः हिमालये शेते ।)

**७. नेपालीभाषायाम् अनुवादम् कुरुत**

(क) अहम् श्वशुरमन्दिरम् गच्छामि ।

(ख) जामाता पूजाम् अपेक्षते ।

(ग) हरः हिमालये शेते ।

(घ) त्वम् कुत्र गच्छसि ?

## विशेष अभ्यास

### तत्सम र तद्भव शब्द

नेपालीभाषामा संस्कृतबाट दुई प्रकारले शब्दहरू आएका छन्- तत्सम र तद्भव । संस्कृत शब्द जस्ताको तस्तै नेपालीमा आएका छन् भने तिनलाई तत्सम भनिन्छ, तर उही अर्थ भए पनि संस्कृतबाट रूपमा केही फरक परिआएका शब्दलाई तद्भव भनिन्छ । जस्तै-

| तत्सम | | तद्भव | |
|---|---|---|---|
| संस्कृत | नेपाली | संस्कृत | नेपाली |
| सदा | = सदा | श्वसुर: | = ससुरा |
| पूजा | = पूजा | भक्तम् | = भात |
| कन्या | = कन्या | ओष्ठ: | = ओठ |
| राशि: | = राशि | हस्त: | = हात |
| ग्रह: | = ग्रह | तैलम् | = तेल |
| हरि: | = हरि | सन्ध्या | = साँझ |
| हिमालय: | = हिमालय | दन्त: | = दाँत |
| मन्दिरम् | = मन्दिर | व्याघ्र: | = बाघ |
| प्रथम: | = प्रथम | विडाल: | = बिरालो |
| दशम: | = दशम | चैत्र: | = चैत |

षोडशः पाठः

# न मूर्खो हितकारकः

एकस्मिन् नगरे भूमिपतिः आसीत्। तस्य भवने बहवः पशवः आसन्। तेषु अजाः, मेषाः, वृषाः, शृगालाः, घोटकाः, वानराः, आसन्, कपोताः, शुकाः, मयूराः, मत्स्याः इत्यादयः अपि तत्र आसन्। ते सर्वे स्वामिनः सेवाम् अकुर्वन्।

तेषु एकः वानरः भूमिपतेः प्रियः अभवत्। अतः सः सर्वदा स्वामिनः सेवाम् कृत्वा समयम् अनयत्।



एकदा भूमिपतिः सुप्तः आसीत्। वानरः तस्य रक्षकः भूत्वा अतिष्ठत्। तदा काचित् मक्षिका भूमिपतेः नासिकायाम् अवसत्। वानरः ताम् निवारयितुम् प्रायतत। किन्तु सा मक्षिका पुनः पुनः आगत्य तत्रैव अतिष्ठत्। क्रुद्धः वानरः मक्षिकाम् मारयितुम् खड्गम् प्राहरत्।

ततः मक्षिका उड्डीय दूरम् अगच्छत् । किन्तु खड्गस्य प्रहारेण भूमिपतेः नासिका छिन्ना अभवत् । मूर्खस्य संगतिः सर्वान् पीडयति । तस्मात् नीतिशास्त्रे अपि कथितम् अस्ति- **"न मूर्खो हितकारकः"** ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| एकस्मिन् | = एउटा | नगरे | = शहरमा |
| भूमिपतिः | = जमिन्दार, राजा | पशवः | = पशुहरू |
| अजाः | = बोकाहरू | शृगालाः | = स्यालहरू |
| वानराः | = बाँदरहरू | शुकाः | = सुगाहरू |
| मत्स्याः | = माछाहरू | स्वामिनः | = मालिकको |
| प्रियः | = प्यारो | कृत्वा | = गरेर |
| तदा | = त्यही बेला | अतिष्ठत् | = रह्यो, बस्यो |
| काचित् | = कुनै | तस्य | = तिनको |
| भवने | = घरमा | अकुर्वन् | = गर्दथे |
| निवारयितुम् | = धपाउन, हटाउन | आगत्य | = आएर |
| मारयितुम् | = मार्न | प्राहरत् | = हान्यो |
| प्राहरत् | = हान्यो | प्रायतत | = प्रयत्न गऱ्यो |
| पीडयति | = दुःख दिन्छ | खड्गम् | = खड्ग, तरवार |
| उड्डीय | = उडेर | छिन्ना | = काटियो |

## अभ्यासः

**१. शुद्धम् उच्चारयत**

भूमिपतिः, श्रृगालाः, मत्स्याः, निवारयितुम् ।

**२. अभ्यासपुस्तिकायाम् सारयत**

भूमिपतेः, सुप्तः, नासिकायाम्, पीडयति ।

**३. नेपालीभाषायाम् अर्थम् लिखत**

भूमिपतिः, उड्डीय, आगत्य, छिन्ना ।

४. **अधोलिखितान् शब्दान् प्रयुज्य वाक्यानि रचयत**

वानरः, आगत्य, खड्गम्, अगच्छत् ।

५. **रिक्तस्थानम् पूरयत**

(क) एकस्मिन् ..... ..... ..... भूमिपतिः आसीत् । (वने, नगरे, भवने)

(ख) वानरः मक्षिकाम् ..... ..... खड्गम् प्राहरत् । (मारयितुम्, निवारयितुम्, कारयितुम्)

(ग) मक्षिका भूमिपतेः ..... ..... अवसत् । (कर्णे, नासिकायाम्, मुखे)

(घ) मूर्खस्य संगतिः सर्वान् ..... ..... । (सुखयति, आनयति, पीडयति)

६. **संस्कृते उत्तरयत**

(क) भूमिपतेः गृहे के के पशवः आसन् ?

(उदाहरणम्- भूमिपतेःगृहे अजाः, मेषाः, वृषाः, शृगालाः, घोटकाः वानराः आसन्)

(ख) तस्य गृहे के के पक्षिणः आसन् ?

(ग) वानरः कस्य प्रियः आसीत् ?

(घ) मूर्खस्य संगतिः किम् करोति ?

(ङ) वानरः किमर्थम् खड्गम् प्राहरत् ?

७. **उदाहरणम् अनुसृत्य रूपाणि लिखत**

| **धातुः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| नी (लैजानु) | अनयत् | अनयताम् | अनयन् |
| बस्, बस्नु, | ..... ...... | ..... ..... | ..... ..... |
| स्था (तिष्ठ) रहनु | | | |
| गम् (गच्छ) जानु | ..... ...... | ..... ..... | ..... ..... |
| भू (भव्) (हुनु) | ...... ..... | ..... ..... | ..... ..... |

८. **अनुवादम् कुरुत**

(क) उमा किताब पढ्छे ।

(ख) बाँदर प्यारो थियो ।

(ग) हामी संस्कृत पढ्छौं ।

(घ) मूर्खको संगतले दुःख दिन्छ ।

## विशेष अभ्यास

**भूतकाल, लङ्लकार**

बितेको समय बुझाउने काल भूतकाल हुन्छ । यसमा सामान्यतः लङ् लकारको प्रयोग हुन्छ । यसमा धातुका अगाडि अ थपिन्छ । केही उदाहरण-

| धातु | पुरुष | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|---|
| पठ् | प्रथम | अपठत् | अपठताम् | अपठन् |
| (पढ्नु) | मध्यम | अपठः | अपठतम् | अपठत |
| | उत्तम | अपठम् | अपठाव | अपठाम |
| धाव् | प्रथम | अधावत् | अधावताम् | अधावन् |
| (दौडनु) | मध्यम | अधावः | अधावतम् | अधावत |
| | उत्तम | अधावम् | अधावाव | अधावाम |
| गम् | प्रथम | अगच्छत् | अगच्छताम् | अगच्छन् |
| (जानु) | मध्यम | अगच्छः | अगच्छतम् | अगच्छत |
| | उत्तम | अगच्छम् | अगच्छाव | अगच्छाम |

वद्, चल्, जीव्, रक्ष्, नम्, खन्, वस् आदि धातुका भूतकाल लङ्लकारका रूप पठ् धातुका जस्तै हुन्छन् ।

सप्तदशः पाठः

# उद्यानम् गच्छाव



श्यामः - राधे ? आगच्छ, उद्यानम् गच्छाव ।

राधा - किमर्थम् ?

श्यामः - तत्र गत्वा पुष्पाणि आनेष्यावः ।

राधा - उद्याने अधुना पुष्पाणि न सन्ति ।

श्यामः - उद्याने पुष्पाणि न सन्ति ? एतत् तु महत् आश्चर्यम्

राधा - आम्, सत्यम् वदामि । उद्याने पुष्पाणि न सन्ति ।

श्यामः - जनाः अधुना प्रायेण वृक्षान् न रोपयन्ति ।

राधा - रोपितानाम् वृक्षाणाम् संरक्षणम् अपि न कुर्वन्ति । अथ कथम् पुष्पाणि भवेयुः ।

श्यामः - सत्यम् वदसि । प्राचीनसमये जनाः गृहे-गृहे तुलसीरोपणम् कुर्वन्ति स्म । मार्गे-मार्गे वट-पिप्पलरोपणम् कुर्वन्तिस्म । स्थाने-स्थाने वनानि च आसन् ।

राधा - अत एव तदा समये-समये वृष्टिः अभवत् । भूस्खलनम् न्यूनम् आसीत्
खाद्यान्नस्य अभावः अपि न आसीत् ।

श्याम - वातावरणम् अपि तदा स्वच्छम् आसीत् ।

राधा - अधुना वातावरणस्य स्वच्छतायै कः उपायः कर्तव्यः ?

श्यामः - वातावरणस्य स्वच्छतायै नागरिकेषु जागरणम् आवश्यकम् ।

राधा - कीदृशम् जागरणम् ?

श्यामः - जनाः यत्रतत्र मलक्षेपणम् न कुर्वन्तु । मार्गेषु नदीषु च स्वच्छता स्थापनीया ।

राधा - स्वच्छतास्थापनेन एव किम् भवति ?

श्यामः - रोगाणाम् प्रसारः न भवति । नगरस्य सौन्दर्यम् च वर्धते ।

राधा - अपरम् किम् कर्तव्यम् ?

श्यामः - स्थाने-स्थाने वृक्षाणाम् रोपणम् कर्तव्यम् । उद्यानस्य निर्माणम् च कर्तव्यम् ।

राधा - अतीव शोभनः उपायः अस्ति ।

राधाश्यामौ - आवाम् अपि अस्मिन् कार्ये संलग्नौ भवाव ।

**शब्दार्थाः**

आगच्छ = आऊ
गच्छाव = जाऔँ (दुई वचन)
आनेष्यावः = ल्याउनेछौँ (दुई वचन)
वृक्षान् = रूखहरू (लाई)
रोपयन्ति = रोप्तछन्
भूस्खलनम् = जमिन बग्नु, पहिरो जानु
मलक्षेपणम् = फोहरमैला फ्याँक्नु
भवाव = होऔँ (दुई वचन)
उद्यानम् = बगैँचा
किमर्थम् = किन
अधुना = अहिले
प्रायेण = धेरैजसो
वृष्टिः = वर्षा
खाद्यान्नस्य = खाने अन्नको
स्थापनीया = राख्नुपर्छ
कुर्वन्ति स्म = गर्दथे

## अभ्यासः

**१. शुद्धम् उच्चारयत**

आनेष्यावः, आश्चर्यम्, भूस्खलनम्, स्थापनीया ।

**२. अभ्यासपुस्तिकायाम् सारयत**

प्राचीनसमये, तुलसीरोपणम्, स्वच्छता, सौन्दर्यम् ।

**३. नेपालीभाषायाम् अर्थम् लिखत**

पुष्पाणि, किमर्थम्, मलक्षेपणम्, वृष्टिः ।

**४. संस्कृते उत्तरयत**

(क) उद्याने पुष्पाणि सन्ति न वा ? (उदाहरणम्- उद्याने पुष्पाणि न सन्ति ।)

(ख) प्राचीनसमये भूस्खलनम् आसीत् न वा ?

(ग) स्वच्छतास्थापनेन किम् भवति ?

(घ) प्राचीनसमये वातावरणम् कीदृशम् आसीत् ?

**५. अधोलिखितान् शब्दान् प्रयुज्य वाक्यानि रचयत**

जलम्, उद्यानम्, सन्ति, स्वच्छम् ।

**६. रिक्तस्थानम् पूरयत**

(क) जनाः अधुना प्रायेण ..... ..... न रोपयन्ति । (वृक्षान्, उद्यानम्, पुष्पाणि)

(ख) प्राचीनसमये भूस्खलनम् ..... ..... आसीत् । (अधिकम्, न्यूनम्, साधारणम्)

(ग) जनाः ..... ..... ..... तुलसीरोपणम् कुर्वन्ति स्म । (गृहे, वने, मार्गे)

(घ) उद्याने अधुना ..... ..... ..... न सन्ति । (वनानि, पुष्पाणि, कमलानि)

**७. सन्धिविच्छेदम् कुरुत**

खाद्यान्नम्, करुणावतारम्, यथेच्छम्, परीक्षोत्तीर्णः ।

**८. नेपालीभाषायाम् अनुवादम् कुरुत**

(क) आवाम् पुष्पाणि आनेष्यावः ।

(ख) वातावरणम् स्वच्छम् आसीत् ।

(ग) रोगाणाम् प्रसारः न भवति ।

(घ) त्वम् सत्यम् वदसि ।

## विशेष अभ्यास

### द्विवचनको प्रयोग

संस्कृतमा तीन वचन छन्- एकवचन, द्विवचन र बहुवचन । कर्ता अनुसार क्रियाको रूप चल्ने हुनाले एकवचन कर्तामा एकवचन क्रिया र बहुवचन कर्ता बहुवचन क्रियाको प्रयोग गरेजस्तै द्विवचन कर्ता भएमा क्रिया पद पनि द्विवचनकै प्रयोग गर्नुपर्दछ । तलको तालिकाबाट विभिन्न वचनको प्रयोगबारे बुझ्न सकिन्छ ।

| | कर्ता | क्रिया |
|---|---|---|
| एकवचन | छात्रः | पठति |
| द्विवचन | छात्रौ | पठतः |
| बहुवचन | छात्राः | पठन्ति |

**आकारान्त स्त्रीलिङ्ग**

| | **कर्ता** | **क्रिया** |
|---|---|---|
| एकवचन | बालिका | खादति |
| द्विवचन | बालिके | खादतः |
| बहुवचन | बालिकाः | खादन्ति |

**अकारान्त नपुंसकलिङ्ग**

| | **कर्ता** | **क्रिया** |
|---|---|---|
| एकवचन | पत्रम् | पतति |
| द्विवचन | पत्रे | पततः |
| बहुवचन | पत्राणि | पतन्ति |

यस्तै- आवाम् गच्छावः (हामी दुई जान्छौँ), तौ हसतः (ती दुई हाँस्छन्), घोटकौ धावतः (दुई घोडा दौडन्छन्) ।

अष्टादशः पाठः

# नीति-पद्यानि

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥१॥

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥२॥

शनैः पन्थाः शनैः कन्था शनै पर्वतलङ्घनम् ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥३॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥४॥

१. **अन्वयः**- लघुचेतसाम्, अयम्, निजः, परः, वा, इति गणना, उदारचरितानाम्, तु, वसुधा, एव, कुटुम्बकम् (भवति) ।

**अर्थः**- क्षुद्राः जनाः अयम् निजः अयम् परः इति वदन्ति । परन्तु उदारहृदयानाम् संसारस्य सर्वे एव जनाः कुटुम्बस्वरूपाः भवन्ति ।

(छोटो बुद्धि भएका मानिसहरू यो मेरो आफ्नो र त्यो अर्काको हो भनी गणना गर्दछन् । ठूलो हृदय भएका मानिसहरू त आफन्त वा पराइ नभनीकन संसारकां सबै मानिसलाई एकै परिवारका ठान्दछन् ।)

२. **अन्वयः**- इह, भूतिम्, इच्छता, पुरुषेण, षड् दोषाः, निद्रा, तन्द्रा, भयम्, क्रोधः, आलस्यम्, दीर्घसूत्रता (च) हातव्याः ।

**अर्थः**- लोके ऐश्वर्यम् इच्छता जनेन निद्रा तन्द्रा भयम् क्रोधः आलस्यम् दीर्घसूत्रता इति षड् दोषाः त्याज्याः ।

(यस संसारमा कल्याण अर्थात् ऐश्वर्य चाहने व्यक्तिले ज्यादा निद्रा, तन्द्रा (उँघाइ) डर, रीस, अल्छीपन, जुम्सोपन यी ६ वटा दोषलाई छोड्नुपर्दछ) ।

३. **अन्वयः**:- शनैः, पन्थाः, शनैः, कन्था, शनैः पर्वतलङ्घनम्, शनैः, विद्या, शनैः, वित्तम् एतानि पञ्च शनैः शनैः भवन्ति ।

**अर्थः**:- सुदीर्घः पन्थाः अपि शनैः, अतिवाह्यते । कन्था (जीर्णवस्त्रम्) अपि शनैः सिध्यति । पर्वतलङ्घनम् शनैः भवति । विद्या अपि शनैः प्राप्यते । वित्तम् अपि शनैः वर्धते । एतानि पञ्चवस्तूनि शनैः शनैः भवन्ति ।

(बाटो बिस्तारै काटिन्छ । कन्था बिस्तारै बनाइन्छ । पहाड नाघ्ने काम बिस्तारै हुन्छ । त्यस्तै, विद्या प्राप्त गर्ने र धन कमाउने काम पनि अलि-अलि गरेर पूरा हुन्छ, अर्थात् यी ५ वटा काम गर्न हडबडाएर हैन, धैर्यसाथ प्रयत्न गर्नुपर्छ ।)

४. **अन्वयः**:- शैले शैले माणिक्यम् न (भवति) । गजे गजे मौक्तिकम् न (भवति) । वने वने चन्दनं न (भवति) । (एवमेव) सर्वत्र साधवः नहि (भवन्ति) ।

**अर्थः**:- शैले शैले रत्नम् न भवति, कुत्रचित् पर्वते एव तत् प्राप्यते । तथैव प्रत्येकम् गजे मौक्तिकम् न भवति । अथ च प्रत्येकम् वने चन्दनं न भवति । क्वचिद् एव चन्दनवृक्षः प्राप्यते । तथैव सर्वत्र स्थाने साधवः न भवन्ति । क्वचिद् एव ते दुर्लभतया प्राप्यन्ते ।

(हरेक पहाडमा रत्न हुँदैन । हरेक हात्तीमा मोती हुँदैन । त्यस्तै प्रत्येक जङ्गलमा श्रीखण्ड हुँदैन । यसै गरी जहाँसुकै पनि सज्जनहरू पाइँदैनन्, अर्थात् कहीं-कहीं मात्र मुस्किलले सज्जनसँग सम्पर्क हुन्छ ।)

**शब्दार्थाः**

(१)

| | | | |
|---|---|---|---|
| लघुचेतसाम् | = छोटो बुद्धि भएकाहरूको | वसुधा एव | = पृथ्वी नै |
| निजः | = आफ्नो | कुटुम्बकम् | = जहान, परिवार |
| परः | = अर्को | उदारचरितानाम् | = विशालहृदय भएकाहरूको |

(२)

| | | | |
|---|---|---|---|
| इह | = यस संसारमा, यहाँ | क्रोधः | = रिस |
| भूतिम् | = ऐश्वर्य (लाई) | आलस्यम् | = अल्छीपन |

इच्छता = चाहनेले
दोषा: = दोषहरू
तन्द्रा = उँघाइ
दीर्घसूत्रता = जुम्सोपन
हातव्या: = छोड्नुपर्छ

(३)

शनै: बिस्तारै
पन्था: = बाटो
पञ्च = पाँच
कन्था = थोत्रो लुगा, थाङ्गनो
(कपडाका टुक्राटुक्रा गाँसेर तयार पारिने जोगीको झोली वा ओड्ने)
पर्वतलङ्घनम् = पहाड नाघ्ने काम
वित्तम् = धन, सम्पत्ति ।
एतानि = यिनीहरू

(४)

शैल: = पहाड
माणिक्यम् = रत्न, माणिक्य
मौक्तिकम् = मोती
साधव: = साधुहरू, सज्जनहरू
चन्दनम् = चन्दन, श्रीखण्ड

## अभ्यास:

**१. शुद्धम् उच्चारयत**

षड्दोषा: पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥

**२. शुद्धम् लिखत**

शनै: पन्था: शनै: कन्था शनै: पर्वतलङ्घनम् ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनै: शनै: ॥

**३. नेपालीभाषायाम् अर्थम् लिखत**

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥

**४. संस्कृते उत्तरयत**

(क) कीदृशानाम् जनानाम् कृते वसुधैव कुटुम्बकम् भवति ?
(उदा.- उदारचरितानाम् जनानाम् कृते वसुधैव कुटुम्बकम् भवति)
(ख) के षड् दोषा: ?
(ग) जन: कथम् विद्याम् प्राप्नोति ?

(घ) साधवः सर्वत्र भवन्ति न वा ?

(ङ) कानि वस्तूनि शनैः भवन्ति ?

**५. अधोलिखितम् पद्यम् कण्ठस्थम् श्रावयत**

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

**६. रिक्तस्थानम् पूरयत**

(क) शनैः पन्थाः शनैः ..... ..... शनैः पर्वतलङ्घनम् । (कन्था, पन्थाः, कथा)

(ख) निन्द्रा तन्द्रा भयं ..... ..... आलस्यं दीर्घसूत्रता । (अलसता, भीतता, क्रोधः)

(ग) शैले शैले न ..... ..... मौक्तिकं न गजे गजे । (चन्दनम्, माणिक्यम्, सौन्दर्यम्)

(घ) अयं निजः परो वेति गणना ..... .... । (उदारचरितानाम्, लघुचेतसाम्, दृढचेतसाम्)

**७. परस्परम् मेलयत**

| | |
|---|---|
| (क) शनैःशनैः भवन्ति | (क) मौक्तिकम् न भवति |
| (ख) षड्दोषाः हातव्याः | (ख) वसुधैव कुटुम्बकम् |
| (ग) उदारचरिताः जनाः किम् मानयन्ति | (ग) भूतिमिच्छता जनेन |
| (घ) गजे गजे | (घ) पन्थाः, कन्था, पर्वतलङ्घनम् विद्या, वित्तम् |

**८. अधोनिर्दिष्टानाम् शब्दानाम् सन्धिविच्छेदं कुरुत**

पुरुषेणेह, वसुधैव, पञ्चैतानि ।

**९. अधोनिर्दिष्टान् शब्दान् बाक्येषु योजयत**

अयम्, निद्रा, विद्या, गजः ।

**१०. संस्कृते अनुवादम् कुरुत**

(क) विद्यार्थी पढ्छ ।

(ख) तिमी के गर्छौ ?

(ग) हामी पढ्छौं ।

(घ) साँचो बोल ।

## विशेष अभ्यास

### सन्धि र समास

१. धेरै पद मिली एउटै हुने प्रक्रियालाई समास भनिन्छ भने पहिलो पदको पछिल्लो वर्ण र पछिल्लो पदको पहिलो वर्ण मिल्न जाने स्थितिलाई सन्धि भनिन्छ । समासमा शब्दको अर्थ नै पनि कतै-कतै फेरिन्छ भने सन्धिमा अर्थ यथावत् रहन्छ । सन्धि- **अच् सन्धि, हल् सन्धि** र **विसर्ग सन्धि** समेत मुख्य तीन छन् भने समासका प्रमुख छ भेद छन्- **अव्ययीभाव, तत्पुरुष, द्वन्द्व, कर्मधारय, बहुव्रीहि** र **द्विगु** ।

२. पाठमा दिएका पद्यमा लघुचेतसाम्, उदारचरितानाम्, दीर्घसूत्रता, पर्वतलङ्घनम् यी शब्द समस्त हुन् ।

३. सन्धि भएका केही शब्द र तिनको विच्छेद अवस्था यसरी देखाइन्छ-

| | | |
|---|---|---|
| वसुधैव | वसुधा = एव | वृद्धि (ऐ) |
| पञ्चैतानि | पञ्च = एतानि | वृद्धि (ऐ) |
| शनैर्विद्या | शनैः = विद्या | विसर्ग (र्) |
| शनैर्वित्तम् | शनैः = वित्तम् | विसर्ग (र्) |
| वेति | वा = इति | गुण (ए) |
| पुरुषेणेह | पुरुषेण = इह | गुण (ए) |

ऊनविंशः पाठः

# नेपालस्य एकीकरणम्



नेपालदेशस्य एकीकरणम् अस्माकम् पूर्वजाः दुःखेन अकुर्वन् । श्री ५ पृथ्वीनारायणशाहः खण्डितरूपेण स्थितान् भूभागान् एकत्रीकृत्य अखण्डम् नेपालम् अरचयत् । सः गोरखाप्रदेशस्य राजा आसीत् । खण्डितः नेपालः निर्बलः भवति इति विचार्य सः सबलम् नेपालम् अकरोत् । ततः पूर्वम् पूर्वभागे पश्चिमभागे च अनेकानि राज्यानि आसन् ।

पृथ्वीनारायणशाहः दूरदर्शी आसीत् । सः बहुकालम् यावत् युद्धम् अकरोत् । युद्धे बहवः विघ्नाः आगच्छन् तथापि सः संघर्षम् कृत्वा लक्ष्यम् प्राप्तवान् ।

सः राष्ट्रहिताय बहून् उपायान् अवदत् । तस्य विचारे अयम् देशः एकम् उद्यानम् अस्ति, सर्वे जनाः पुष्पाणि सन्ति । परस्परम् सहयोगेन देशस्य सौन्दर्यम् वर्धते, समृद्धिः अपि भवति । स्वदेशस्य उन्नतिः स्वयम् एव कर्तव्या । उद्योगानाम् सञ्चालनम् स्वयम् एव कर्तव्यम् । स्वकीया संस्कृतिः स्वयम् संरक्षणीया । देशः स्वावलम्बी भवतु । स्वदेशे अर्जितम् धनम् विदेशे न प्रापणीयम् । उत्कोचस्य दाता ग्रहीता च दण्डनीयौ । पृथ्वीनारायणस्य इमे विचाराः अद्यापि मार्गदर्शकाः सन्ति ।

नेपालस्य एकीकरणे आदिकवे: भानुभक्तस्य योगदानम् अपि बहुमूल्यम् अस्ति । भानुभक्त: आचार्य: काव्यमाध्यमेन जनान् एकसूत्रे आबद्धवान् । तेन नेपालीभाषायाम् लिखितम् रामायणम् अतीव लोकप्रियम् अस्ति ।

अन्ये अपि बहव: पूर्वजा: नेपालस्य समुत्थानाय प्रयत्नान् अकुर्वन् । तेषाम् प्रयत्नेन अधुना वयम् सर्वे मिलित्वा अत्र वसाम: । अस्य देशस्य विकासाय स्वतन्त्रताया: संरक्षणाय च वयम् अपि प्रयत्नम् कुर्म: ।

**शब्दार्था:**

| | | | |
|---|---|---|---|
| एकीकरणम् | = एकै पार्ने काम | स्वावलम्बी | = आत्मनिर्भर |
| पूर्वजा: | = पुर्खाहरू | अर्जितम् | = कमाएको |
| खण्डितरूपेण | = टुक्रा रूपले | न प्रापणीयम् | = पुऱ्याउनुहुन्न |
| स्थितान् | = रहेका | उत्कोच: | = घुस |
| भूभागान् | = भूभागहरूलाई | दाता | = दिने |
| एकत्रीकृत्य | = एकट्ठा पारेर | ग्रहीता | = लिने |
| अखण्डम् | = खण्ड नभएको | दण्डनीयौ | = दण्ड दिन लायक (दुई) |
| अरचयत् | = बनायो, बनाए | अद्यापि | = आज पनि |
| निर्बल: | = दुब्लो, कमजोर | तथापि | = तैपनि |
| विचार्य | = विचार गरेर | मार्गदर्शका: | = बाटो देखाउने |
| सबलम् | = बलियो, दह्रो | काव्यमाध्यमेन | = काव्यका माध्यमले |
| अनेकानि | = धेरै | लोकप्रियम् | = दुनियाँको प्यारो |
| बहुकालम् यावत् | = धेरै समयसम्म | समुत्थानाय | = उन्नतिका लागि |
| युद्धम् | = लडाइँ | आबद्धवान् | = बाँध्यो, बाँधे |
| सौन्दर्यम् | = सुन्दरता | एकसूत्रे | = एक डोरोमा |
| समृद्धि: | = ऐश्वर्य | बहुमूल्यम् | = धेरै मूल्यको |
| वर्धते | = बढ्छ | इमे | = यी, यिनीहरू |
| स्वदेशस्य | = स्वदेशको | मिलित्वा | = मिलेर |
| उन्नति: | = बढाइँ | दूरदर्शी | = पछिसम्मको कुरा देख्ने |
| अस्माकम् | = हाम्रो | | |

## अभ्यासः

**१. शुद्धम् उच्चारयत**

एकीकरणम्, दूरदर्शी, समृद्धिः, उन्नतिः ।

**२. अभ्यासपुस्तिकायाम् सारयत**

एकत्रीकृत्य, संघर्षम्, अद्यापि, ग्रहीता ।

**३. अर्थम् लिखत**

पूर्वजाः, अखण्डम्, अर्जितम्, वर्धते ।

**४. संस्कृते उत्तरयत**

(क) कः अखण्डम् नेपालम् अरचयत् ?

(उदाहरणम्- पृथ्वीनारायणशाहः अखण्डम् नेपालम् अरचयत् ।)

(ख) उत्कोचस्य विषये पृथ्वीनारायणस्य कीदृशः विचारः ?

(ग) भानुभक्तः किम् नाम काव्यम् अरचयत् ?

(घ) नेपालस्य एकीकरणे भानुभक्तः किम् योगदानम् अकरोत् ?

**५. सन्धिविच्छेदम् कुरुत**

तथापि, वसुधैव, अद्यापि, क्रीडार्थम् ।

**६. रिक्तस्थानम् पूरयत**

(क) पृथ्वीनारायणशाहः ..... .... ..... राजा आसीत् । (पालपाप्रदेशस्य, मकवानपुरप्रदेशस्य, गोरखाप्रदेशस्य)

(ख) स्वकीया ..... ..... ..... स्वयम् संरक्षणीया । (संस्कृतिः, प्रकृतिः, उन्नतिः)

(ग) पृथ्वीनारायणस्य विचारे देशः ..... ..... अस्ति । (गृहम्, उद्यानम्, मन्दिरम्)

(घ) भानुभक्तस्य ..... ..... लोकप्रियम् अस्ति । रामायणम्, महाभारतम्, पुराणम्)

७. पृथ्वीनारायणस्य विषये पञ्च वाक्यानि लिखत ।

**८. नेपालीभाषायाम् अनुवादम् कुरुत**

(क) पृथ्वीनारायणशाहः अखण्डम् नेपालम् अरचयत् ।

(ख) देशः एक उद्यानम् अस्ति ।

(ग) सर्वे जनाः अत्र खेलन्ति ।

(घ) सहयोगेन उन्नतिः भवति ।

## विशेष अभ्यास

**कृत् प्रत्यय-क्त्वा, ल्यप्**

१. धातुबाट लाग्ने प्रत्ययहरूलाई कृत् प्रत्यय भनिन्छ । **कृत** प्रत्यय लागी बनेका शब्दलाई **कृदन्त** शब्द भनिन्छ । **कृदन्त** शब्द **नाम**, **विशेषण**, **अव्यय** आदि समूहमा पर्दछन् । **क्त**, **क्त्वा**, **ल्यप्**, **शतृ**, **शानच्**, **तव्य**, **अनीयर्** आदि प्रमुख **कृत्** प्रत्यय हुन् ।

२. पढेर, गएर, भएर आदि पूर्वक्रिया बुझाउँदा धातुबाट **क्त्वा** प्रत्यय हुन्छ । उपसर्ग लाग्दा वा अर्को अव्यय शब्द जोडिँदा **ल्यप्** प्रत्यय हुन्छ । **क्त्वा** प्रत्ययमा **त्वा** बाँकी रहन्छ भने **ल्यप्** मा **य** बाँकी रहन्छ । जस्तै- गम् = क्त्वा = गत्वा (गएर), पठ् = क्त्वा = पठित्वा (पढेर), खाद् = क्त्वा = खादित्वा (खाएर) भू = क्त्वा = भूत्वा (भएर) कृ = क्त्वा = कृत्वा (गरेर) इत्यादि । उपसर्ग लाग्दा- आ + गम् + ल्यप् = आगत्य, आगम्य (आएर), सम् + भू + ल्यप् = संभूय (भएर) प्र + नम् + ल्यप् = प्रणम्य (प्रणाम गरेर) इत्यादि ।

विंशः पाठः

# भरतस्य वीरता

"भो शिशो तव दन्ताः कति सन्ति ? अहम् गणयामि । क्षणम् तिष्ठ ।" बालकः भरतः मधुरम् हसति । सः सिंहशिशुना सह खेलन् अस्ति ।

वनस्य मध्यभागे आश्रमः अस्ति । निकटे नदी वहति । वनपशवः यत्र-तत्र भ्रमन्ति । भरतः निर्भयः भूत्वा तैः सह खेलति । सः कदाचित् मृगबालकान् आश्रमम् आनयति । कदाचित् सिंहशिशून् स्वनिवासम् आनयति ।



"भो भरत ! अद्य वनम् न गच्छ । जलम् वर्षति । नदीप्रवाहः वर्धते । वने महद् भयम् भवति । सिंहाः, व्याघ्राः, भल्लुकाः, इत्यादयः पशवः भ्रमन्ति ।" भरतस्य माता शकुन्तला एवम् वदति, किन्तु भरतः तस्याः वचनम् न शृणोति ।

भरतः पञ्चवर्षीयः अस्ति । कदाचित् सः गभीरेषु नदीप्रवाहेषु प्रविशति, कदाचित् करे धनुः गृहीत्वा क्रीडार्थम् एकाकी वनम् गच्छति ।

शकुन्तला कठोरकार्यात् भरतम् निवारयति परन्तु भरतस्य हृदये भयम् एव नास्ति । सः शकुन्तलाम् वदति- "अहम् सिंहशिशुना सह खेलामि । भो मातः, मम चिन्ताम् न कुरु ।"

दुष्यन्तेन सह शकुन्तलायाः प्रेमविवाहः अभवत् । शापवशात् सः भार्याम् शकुन्तलाम् विस्मृतवान् । अतः शकुन्तला ऋषेः आश्रमे अवसत् । तत्रैव भरतः

अजायत । नृपस्य पुत्र: अस्ति । जात्या क्षत्रिय: वर्तते । आश्रमे जन्म अभवत् । वने निवास: अभवत् । पशुभि: सम्पर्क: आसीत् । अत: बालक: भरत: स्वभावत: चपल: वीरश्च अभवत् ।

स: भरत: पश्चात् विपुलम् भूभागम् अशासत् । तस्यैव नाम्ना "भारतवर्षम्" इति प्रसिद्धि: अभवत् ।

**शब्दार्था:**

| | | | |
|---|---|---|---|
| शिशु: | = बच्चा | विपुलम् | = ठूलो |
| गणयामि | = गन्दछु | अशासत् | = शासन गऱ्यो, शासन गरे |
| दन्ता: | = दाँतहरू | चपल: = | = चञ्चल, चकचके |
| क्षणम् | = एक छिन | नदीप्रवाह: | = नदीको वेग |
| सिंहशिशुना सह | = सिंहको बच्चा (डमरु) सँग | भल्लूका: | = भालुहरू |
| खेलन् | = खेल्दै | व्याघ्रा: | = बाघहरू |
| आश्रम: | = आश्रम | न शृणोति | = सुन्दैन |
| वनपशव: | = जङ्गली जनावरहरू | यत्र-तत्र | = जहाँतहीँ |
| भ्रमन्ति | = घुम्दछन् | मधुरम् | = मीठो |
| निर्भय: | = डर नभएको | हृदये | = हृदयमा |
| पञ्चवर्षीय: | = पाँच वर्षको | नृपस्य | = राजाको |
| गभीरेषु | = गहिरा (सप्तमी) | जात्या | = जातिले, जन्मले |
| करे | = हातमा | नाम्ना | = नाउँले |
| क्रीडार्थम् | = खेल्न | स्वभावत: | = स्वभावैले |
| एकाकी | = एक्लो | कठोरकार्यात् | = कडा कामबाट |
| निवारयति | = रोक्छ, रोक्छे, रोक्छिन् | शापवशात् | = सरापका कारणले |
| विस्मृतवान् | = बिर्स्यो, बिर्से | | |

## अभ्यास:

**१. शुद्धम् उच्चारयत**

सिंहशिशुना, दुष्यन्त:, आश्रम:, निवारयति ।

**२. अभ्यासपुस्तिकायाम् सारयत**

क्षत्रिय:, प्रसिद्धि:, गृहीत्वा, नदीप्रवाह: ।

३. **नेपालीभाषायाम् अर्थम् लिखत**

शिशुः, विपुलम्, भ्रमन्ति, चपलः, निर्भयः ।

४. **संस्कृते उत्तरयत**

(क) भरतः केन सह खेलति ? (भरतः सिंहशिशुना सह खेलति ।)

(ख) आश्रमः कुत्र अस्ति ?

(ग) भरतस्य माता का अस्ति ?

(घ) कस्य नाम्ना "भारतवर्षम्" प्रसिद्धम् अभवत् ?

५. **सन्धिविच्छेदम् कुरुत**

इत्यादयः, क्रीडार्थम्, तत्रैव, तथापि ।

६. **परस्परम् मेलयत**

| | |
|---|---|
| (क) वनपशवः | (क) सिंहशिशुना सह खेलति । |
| (ख) भरतस्य माता | (ख) दुष्यन्तः |
| (ग) शकुन्तलायाः पतिः | (ग) शकुन्तला |
| (घ) भरतः | (घ) सिंहाः व्याघ्राः, भल्लूकाः । |

७. **अधस्तनशब्दान् प्रयुज्य वाक्यानि रचयत**

बालकः, अस्ति, गृहे, चपलः, त्वम्, खादसि, फलम्, सः ।

**उदाहरणम्-**

| बालकः | चपलः | अस्ति |
|---|---|---|
| | | |
| | | |
| | | |
| | | |

८. "भरतस्य वीरता" इति कथायाः सारम् लिखत ।

९. **संस्कृते अनुवादम् कुरुत**

(क) भरत चञ्चल छ । (ख) म दाँत गन्दछु ।

(ग) शकुन्तला आश्रममा छन् । (घ) पशुहरू वनमा घुम्दछन् ।

(ङ) चराहरू रूखमा बस्छन् ।

## विशेष अभ्यास

**कृत् प्रत्यय- शतृ, शानच्**

१. कर्तृवाच्यमा वर्तमान कालमा परस्मैपदी धातुदेखि **शतृ** प्रत्यय र आत्मनेपदी धातुदेखि **शानच्** प्रत्यय हुन्छ । **शतृ** प्रत्ययमा धातुबाट **अत** जोडिन्छ र **शानच्** प्रत्ययमा **आन्** जोडिन्छ । यी प्रत्ययमा काम भइरहेको वा गरिरहेको भन्ने अर्थ बुझिन्छ । जस्तै गच्छत् = गइरहेको, भाषमाणम् = बोलिरहेको ।

**शतृ** र **शानच्** प्रत्यय लागेका केही शब्दहरू

| **शतृ** (अत्) | | | **शानच्** (आन्) | | |
|---|---|---|---|---|---|
| **धातु (प्रकृति) -** | **प्रत्यय** | **= रूप** | **धातु (प्रकृति) -** | **प्रत्यय** | **= रूप** |
| वस् | + शतृ | = वसत् | भाष् | + शानच् | = भाषमाण |
| कृ | + शतृ | = कुर्वत् | सह | + शानत् | = शहमान |
| स्था | + शतृ | = तिष्ठत् | शङ्क | + शानच् | = शङ्कमान |
| जीव | + शतृ | = जीवत् | रम् | + शानच् | = रममाण |
| खेल | = शतृ | = खेलत् | | | |

२. बुझ्नुपर्ने के छ भने **शतृ** वा **शानच्** प्रत्यय गरी बनेका खेलत्, वदत्, **गच्छत्**, **भाषमाण**, **रममाण** आदि शब्द विशेषणका रूपमा आउने हुँदा विशेषण अनुसार यिनका रूप सिद्ध हुन्छन् । जस्तै:-

| **शब्द** | **पु** | **स्त्री** | **नपुं** |
|---|---|---|---|
| खेलत् | खेलन् | खेलन्ती | खेलत् |
| गच्छत् | गच्छन् | गच्छन्ती | गच्छत् |
| वदत् | वदन् | वदन्ती | वदत् |
| भाषमाण | भाषमाण: | भाषमाणा | भाषमाणम् |
| रममाण | रममाण: | रममाणा | रममाणम् इत्यादि । |

एकविंशः पाठः

# विद्या-प्रशंसा

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥१॥

ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥२॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥३॥

विद्या कल्पलतातुल्या यथेष्टफलदायिनी ।
स्वदेशेऽपि विदेशेऽपि नराणां मानवर्धिनी ॥४॥

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥५॥

**शब्दार्थाः**

शत्रुः = शत्रु
वैरी = शत्रु
बालः = बालक
येन = जसले
न पाठितः = नपढाइएको, पढाइएन
सभामध्ये = सभाका माझमा
हंसमध्ये = हाँसका माझमा
चोरेण अपि = चोरले पनि
न नीयते = लगिँदैन
दानेन एव = दानले नै
क्षयम् = नाश
न याति = जाँदैन
रूपयौवनसम्पन्नाः = रूप र यौवनले युक्त
विशालकुलसम्भवाः = ठूलो कुलमा जन्मेका

| | | | |
|---|---|---|---|
| बक: | = बकुल्लो | विद्याहीना: | = विद्या नभएका |
| नशोभते | = सुहाउँदैन | निर्गन्धा: | = बास्ना नभएका |
| विद्यारत्नम् | = विद्यारूपी रत्न | किंशुका: | = पलाँसका फूल |
| महाधनम् | = ठूलो धन | न शोभन्ते | = सुहाउँदैनन् |
| ज्ञातिभि: | = दाजु-भाइद्वारा | कल्पलतातुल्या | = कल्पवृक्षजस्तो |
| न वण्ट्यते | = बाँडिदैन | यथेष्टफलदायिनी | = चिताएको फल दिने |
| स्वदेशे | = स्वदेशमा | तम: | = अन्धकार |
| विदेशे | = अर्काको देशमा | हन्ति | = नाश गर्छ |
| नराणाम् | = मानिसहरूको | तारागण | = ताराहरूको समूह |
| मानवर्धिनी | = मान बढाउने | गुणी | = गुण भएको |
| वरम् | = असल, बेस | अपि, च | = पनि |

१. **अन्वय**:– येन बाल: न पाठित:, (स:) पिता वैरी, माता शत्रु: (अस्ति)। हंसमध्ये बक: यथा सभामध्ये (स:) न शोभते।

**अर्थ**:– येन पित्रा मात्रा च बालक: न पाठित:, स: पिता बालकस्य शत्रुतुल्य: भवति, माता अपि शत्रुतुल्या भवति। अशिक्षित: बाल: हंसमध्ये बक इव सभामध्ये न शोभते।

(जसका बाबु-आमाले बालक पढाउँदैनन् ती बाबु-आमा शत्रुजस्तै हुन्। किनभने नपढेको व्यक्ति हाँसका माझमा बकुल्लासरह सभामा शोभाहीन हुन्छ।)

२. **अन्वय**:– विद्यारत्नम्, महाधनम्, ज्ञातिभि:, न वण्ट्यते एव, चोरेण, अपि, न नीयते:, दानेन, एव, क्षयम् न याति।

**अर्थ**:– विद्यारूपम् महाधनम् बन्धुषु विभाजितम् न भवति। चोरेण अपि नेतुम् न शक्यते। दानेन अपि न नश्यति।

(विद्यारूपी महान् धन दाजु-भाइहरूमा बाँडिदैन, चोरले पनि चोर्न सक्तैन, दान दिएर पनि घट्तैन।)

३. **अन्वयः**- रूपयौवनसम्पन्नाः, विशालकुलसम्भवाः, विद्याहीनाः (जनाः), निर्गन्धाः, किंशुकाः, इव, न शोभन्ते ।

**अर्थः**- जनाः सौन्दर्ययुक्ताः, सन्ति, यौवनयुक्ताः सन्ति, उच्चकुले उत्पन्नाः सन्ति, तथापि विद्याहीनाः ते निर्गन्धाः पलाशा इव न शोभन्ते ।

(रूप र यौवनले सम्पन्न र ठूलो कुलघरानमा जन्मेका भए पनि नपढेका मानिसहरू बास्ना नभएका पलासका फूल जस्तै शोभाहीन हुन्छन् । )

४. **अन्वयः**- विद्या, कल्पलतातुल्या, यथेष्टफलदायिनी (भवति) । (सा) स्वदेशे अपि, विदेशे अपि नराणाम् मानवर्धिनी (अस्ति) ।

**अर्थः**- विद्या, कल्पलतातुल्या, यथेष्टफलदायिनी अस्ति । सा स्वेदशे विदेशे अपि नराणाम् सम्मानवर्धिनी अस्ति ।

(विद्या कल्पवृक्षजस्तो चिताएको फल दिने हुन्छ । स्वदेश र विदेशमा पनि विद्याले मानिसको संमान बढाउँछ ।)

५. **अन्वयः**- एकः गुणी, पुत्रः वरम्, मूर्खशतानि अपि च न (वरम्) । एकः चन्द्रः तमः हन्ति, तारागणः अपि च (तमः) न (हन्ति) ।

**अर्थः**- एकः गुणी पुत्रः वरम् । मूर्खपुत्राः शतसंख्यकाः अपि न वरम् । यथा- एकः चन्द्रः अन्धकारम् नाशयति, परन्तु बहुः तारागणः अपि अन्धकारम् न नाशयति ।

(एउटा गुणी छोरो बरु बेस हुन्छ, सय जना मूर्ख छोरा हुनु बेस होइन । जस्तै एउटा (मात्र) चन्द्रमा अन्धकार नाश गर्छ, तर धेरै ताराहरू भएर पनि अँध्यारो हटाउन सक्तैनन् ।)

## अभ्यासः

१. **अधस्तनम् पद्यम् सस्वरम् पठत**

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभन्ते सभामध्ये हंसमध्ये बको यथा ॥

**२. अधस्तनम् पद्यम् अभ्यासपुस्तिकायाम् सारयत**

ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥

**३. नेपालीभाषायाम् अर्थम् लिखत**

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥

**४. रिक्तस्थानम् पूरयत**

रूपयौवनसम्पन्ना ..... ..... ..... ।
..... न शोभन्ते निर्गन्धा इव ..... ॥

**५. संक्षेपेण उत्तरयत**

(क) कीदृश: पिता वैरी भवति ?
(य: पुत्रम् न पाठयति स: पिता वैरी भवति)
(ख) कीदृश: जन: हंसमध्ये बक:इव भवति ?
(ग) एक: चन्द्र: किम् करोति ?
(घ) नराणाम् मानवर्धिनी का अस्ति ?

**६. परस्परम् मेलयत**

| | |
|---|---|
| (क) येन बाल: न पाठित: | (क) गुणी पुत्र: |
| (ख) चोरेण न नीयते | (ख) न शोभन्ते |
| (ग) वरम् एक: | (ग) विद्या |
| (घ) विद्याहीना: | (घ) स: पिता वैरी । |

७. विद्याया: महत्त्वम् पञ्चसु वाक्येषु लिखत ।

**८. अधोलिखितान् शब्दान् प्रयुज्य वाक्यानि रचयत**

शोभते, हन्ति, विद्या, माता, बाल: ।

**९. सन्धिविच्छेदम् कुरुत**

शतान्यपि, वसुधैव, चोरेणापि, इत्यादय: ।

**१०. संस्कृते अनुवादम् कुरुत**

(क) विद्या ठूलो धन हो । (ख) हामी घर जान्छौं ।
(ग) तिमी साँचो बोल्छौ । (घ) रमा संस्कृत पढ्छे ।
(ङ) सिंह वनमा बस्छ ।

## विशेष अभ्यास

**अव्यय**

१. विभक्ति, वचन र लिङ्ग अनुसार रूप नफेरिई सधैँ एकनास रहने शब्दलाई अव्यय शब्द भन्दछन् ।

२. केही प्रचलित अव्यय शब्द यस प्रकार छन्-

**अपि, च, सदा, सर्वदा, तदा, कदा, तथा, यथा, किन्तु, परन्तु, तु, अत्र, यत्र, तत्र, कुत्र, नु, हि, आम्, सह, इव, एव, खलु, अधुना, एवम्, पुनः, चिरम्, अथ, हे ।**

**द्वाविंशः पाठः**

# सङ्ख्या

**१. एकः-** ईश्वरः **एकः** अस्ति ।

**२. द्वौ-** पक्षौ **द्वौ** भवतः- शुक्लपक्षः कृष्णपक्षः च ।

**३. त्रयः-** **त्रयः** कालाः यथा-भूतकालः, वर्तमानकालः, भविष्यत्कालः च ।

**४. चत्वारः-** **चत्वारः** वेदाः, सन्ति । यथा-ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः च ।

**५. पञ्चः-** **पञ्च** तत्त्वानि प्रसिद्धानि-पृथ्वी, जलम्, तेजः, वायुः, आकाशम् च ।

**६. षट्ः-** **षट्** ऋतवः भवन्ति । यथा-वसन्तः, ग्रीष्मः, वर्षा, शरद्, हेमन्तः, शिशिरः च ।

**७. सप्तः-** **सप्त** वारा यथा-रविवारः, सोमवारः, मङ्गलवारः, बुधवारः, बृहस्पतिवारः, शुक्रवारः, शनिवारः च ।

**८. अष्टौः-** **अष्टौ** चिरञ्जीविनः प्रख्याताः सन्ति । यथा-अश्वत्थामा, बलिः, व्यासः, हनूमान्, विभीषणः, कृपः, परशुरामः, मार्कण्डेयः ।

**९. नवः-** ग्रहाः **नव** भवन्ति । यथा-सूर्यः, चन्द्रः, मङ्गलः, बुधः, बृहस्पतिः (गुरुः), शुक्रः, शनिः, राहुः, केतुः ।

**१०. दशः-** दिशः **दश** भवन्ति । यथा-पूर्वा, पश्चिमा, उत्तरा, दक्षिणा, ईशानकोणः, अग्निकोणः, वायुकोणः, निर्ऋतिकोणः, ऊर्ध्वम्, अधः, च ।

**दशाधिकाः सङ्ख्याशब्दाः**

११. एकादश　१२. द्वादश　१३. त्रयोदश　१४. चतुर्दश
१५. पञ्चदश　१६. षोडश　१७. सप्तदश　१८. अष्टादश
१९. ऊनविंशतिः (एकोनविंशतिः, नवदश वा)　२०. विंशतिः
२१. एकविंशतिः　२२. द्वाविंशति　२३. त्रयोविंशतिः　२४. चतुर्विंशतिः
२५. पञ्चविंशतिः　२६. षट्विंशतिः　२७. सप्तविंशतिः　२८. अष्टविंशतिः
२९. ऊनत्रिंशत् (एकोनत्रिंशत्, नवविंशतिः वा)　३०. त्रिंशत् ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| एकादश | = एघार (११) | पञ्चविंशतिः | = पच्चीस (२५) |
| द्वादश | = बाह्र (१२) | षड्विंशतिः | = छब्बीस (२६) |
| त्रयोदश | = तेह्र (१३) | सप्तविंशतिः | = सत्ताइस (२७) |
| चतुर्दश | = चौध (१४) | अष्टविंशतिः | = अट्ठाइस (२८) |
| पञ्चदश | = पन्ध्र (१५) | ऊनत्रिंशत् | = ऊनन्तीस (२९) |
| षोडश | = सोह्र (१६) | त्रिंशत् | = तीस (३०) |
| सप्तदश | = सत्र (१७) | वायुः | = हावा |
| अष्टादश | = अट्ठार (१८) | ऋतवः | = ऋतुहरू |
| ऊनविंशतिः | = उन्नाईस (१९) | चिरञ्जीविनः, चिरजीविनः | = धेरै लामो समयसम्म बाँच्ने, चिरञ्जीवीहरू |
| विंशतिः | = बीस (२०) | ऊर्ध्वम् | = माथि, उँभो |
| द्वाविंशतिः | = बाइस (२२) | अधः | = तल |
| त्रयोविंशतिः | = तेइस (२३) | चतुर्विंशतिः | = चौबीस (२४) |

## अभ्यासः

१. **शुद्धम् उच्चारयत**

ईश्वरः, द्वौ, शुक्लपक्षः, ग्रीष्मः ।

२. **अभ्यासपुस्तिकायाम् सारयत**

चिरञ्जीविनः, विभीषणः, कृष्णपक्षः, बृहस्पतिवारः ।

३. **नेपालीभाषायाम् अर्थम् लिखत**

द्वौ, एकोनविंशतिः, षोडश, त्रिंशत् ।

४. संस्कृते उत्तरयत

(क) वेदाः कति सन्ति ? नामानि लिखत ।

(वेदाः चत्वारः सन्ति । यथा ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः च ।)

(ख) वाराः कति सन्ति ? नामानि लिखत ।

(ग) ऋतवः कति भवन्ति, तेषाम् नामानि लिखत ।

(घ) अष्टानाम् चिरञ्जीविनाम् नामानि लिखत ।

५. परस्परम् मेलयत

| | |
|---|---|
| (क) ईश्वरः | (क) नव |
| (ख) ऋतवः | (ख) सप्त |
| (ग) वाराः | (ग) एकः |
| (घ) ग्रहाः | (घ) षट् |

६. अधो लिखितान् सङ्ख्याशब्दान् प्रयुज्य वाक्यानि रचयत

पञ्च, द्वादश, सप्तदश, नव ।

७. नेपालीभाषायाम् अनुवादम् कुरुत

(क) विंशतिः छात्राः सन्ति ।  (ख) द्वादश मासाः भवन्ति ।

(ग) चन्द्रस्य षोडश कलाः भवन्ति ।  (घ) विद्या महाधनम् अस्ति ।

(ङ) चत्वारः जनाः पठन्ति ।

# शब्दभण्डार:

अंश: = भाग अल्पम् = थोरै
अङ्क: = काख १,२ आदि सङ्ख्या अल्पवृष्टि: = कम पानी पर्नु
अङ्कुर: = आँकुरा, टुसा अवलोकनम् = हेर्नु, हेराइ
अङ्कुरणम् = आँकुरा निस्कनु, टुसा पलाउनु
अवधारणा = निश्चित धारणा, पक्का विचार
अङ्गुष्ठ: = बूढीऔंलो अक्षत:, अक्षता: = पूजामा प्रयोग गरिने पवित्र चामल
अजा = बाखो अक्षरम् = क, ख आदि वर्ण
अञ्जलि: = अँजुली अक्षांश: = भूमध्यरेखा र ध्रुवताराका माझको कोणिक दूरी
अतिवृष्टि: = ज्यादा पानी पर्नु आकर्षकम् = आकर्षण गर्ने, खिच्ने
अतीव = ज्यादै आकर्षणम् आफूतिर तान्नु, खिच्नु
अत्र = यहाँ आकर्षितम् = आकर्षण गरिएको
अधिककोण: = ९० डिग्रीभन्दा बढी र १८० डिग्रीभन्दा कमको कोण
आकृति: = रूप, आकार अध्ययनम् = पढाइ आदर: = सम्मान
अनामिका = साहिँलीऔंला आदानम् = लिनु, ग्रहण
अनुपात: = तुलना, दँजाइ/गणितमा दुई अङ्क मापन
गर्दा लिने मात्रा वा भाग
अनुराग: = प्रेम, स्नेह आधुनिकम् = अहिलेको, वर्तमान
अनुसन्धानम् = खोजी, आविष्कार
आनुवंशिकम् = वंशपरम्पराबाट आएको, पुर्ख्यौली अन्त: = भित्र
आन्तरिक = भित्रको अन्तरिक्षम् = आकाश आपण: = पसल
अन्धपरम्परा = ठीक बेठीक नछुट्याई मान्दै आएको परम्परा
अन्धविश्वास: = एकोहोरो विश्वास आभूषणम् = गहना
अपूप: = मालपुवा आमलक:, आमलकम् = अमला

अभियानम् = माथि चढ्नु, आरोहण/आक्रमण आम्र: = आँप
अभिवृद्धि: = राम्ररी बढ्नु आयताकार: = फराकिलो क्षेत्र, विशाल आकार
अभिव्यञ्जकम् = बताउने, बुझाउने आयात: = बाहिरबाट आएको वा ल्याइएको वस्तु/सो वस्तु ल्याउने काम
अमावास्या = औँसी आयोग: = निश्चित कामका लागि गठन गरिएको समिति
अर्चनम्, अर्चना = पूजा आयोजना = बन्दोवस्त, प्रबन्ध
अर्थ: = धन/शब्दको मतलब या तात्पर्य आयोजितम् = आयोजना गरिएको
आसन्नकोण: = ज्यामितिमा एक कोणसँग जोडिएको अर्को कोण
आस्था = श्रद्धा, विश्वास इतिहास: = बितेको घटना वा विवरण
इन्धनम् = दाउरा/दाउराको बदला ताप पैदा गर्ने मट्टीतेल, पेट्रोल आदि साधन
इक्षु: = उखु कदाचित् = कहिलेकाहीँ
ईश:, ईश्वर: = भगवान्, ईश्वर कदापि = कहिल्यै पनि
उच्चै: = माथि कनिष्ठ: = कान्छो
उत्खननम् = जमिन खन्ने काम कनिष्ठा = कान्छी/कान्छी औँला
कनिष्ठिका कान्छी औँला उत्थानम् = उठ्नु, उन्नति कपोत: = परेवा
उत्पत्ति: = जन्म कपोल: = गाला
उदरम् = पेट करणम् = साधन, औजार/तृतीया विभक्ति जनाउने एक कारक
उद्घोषणम् = घोषणा गर्नु, भन्नु कला = सीप, दक्षता, कुशलता
उपत्यका = पहाडको काखमा बसेको सम्म जमिन, ब्याँसी
कविता = छन्द वा लयमा लेखिएको साहित्यिक विधा, काव्य
उपनयनम् = व्रतबन्ध काण: = कानो
उपनेत्रम् = चस्मा काव्यम् = छन्द वा लयमा आधारित साहित्यिक रचना
उपयोग: = व्यवहार, प्रयोग काष्ठम् = काठ
उपरि = माथि काष्ठकार्यम् = काठको काम
उपार्जनम् = कमाइ किन्तु = तर
उल्लेख: = लेखाइ कीट: = कीरो

उल्लेखनीयम् = उल्लेख गर्न सुहाउँदो  कीटाणु: = रोग उत्पन्न गर्ने सूक्ष्म कीरा
कीटनाशकम् = कीरा मार्ने (ओखती)  कुचालक: = खराब चालक
ऊर्ध्वपातनम् = तरल पदार्थलाई बाफ बनाई ऊँभोतिर हुत्याउने वा फ्याँक्ने क्रिया
कुचालकम् = विद्युत् र ताप सजिलै परिचालन हुन नसक्ने
कच्छप: = कछुवा  कुत: = कहाँबाट
कञ्चुक: = माथिदेखि तलसम्म लगाउने लामो पहिरन, जामा
कुलीन: = खानदान, घरानियाँ  कटाह: = कराही  कुत्र = कहाँ
कटि: = कम्मर  कृपण: = कन्जुस
कथा = गद्यमा लेखिएको आख्यानात्मक साहित्यिक विधा, कहानी
कृष्ण: = भगवान् कृष्ण  कदा = कहिले  गुल्फ: = गोलिगाँठो
कोण: = कुना/दुई दिशाबाट आएका सरल रेखा जोडिने ठाउँ
गोधूम: = गहूँ  गोलार्धम् = गोलो वस्तुको आधा भाग/बिचमा विषुवत् रेखाले छुट्याउँदा हुने भूगोलको आधा भाग
कोश:, कोष: = खजाना, ढुकुटी, भण्डार  गौ: = गाई
कौशलम् = सीप  क्रान्ति: = परिवर्तनका निम्ति गरिने संघर्ष, विद्रोह
क्रान्तिकारी = क्रान्ति गर्ने, विद्रोही  घटिका = घडी
घण्टा = घण्ट/घण्टा  घन: = बाक्लो/ बादल
क्रोध: = रिस  घनत्वम् = बाक्लोपन/लम्बाइ, चौडाइ, मोटाइ वा गहिराइको परिणाम
खग: = चरो  घनमण्डलम् = पृथ्वीको बनोटमा सबभन्दा भित्रपट्टिको भाग
खण्ड: = भाग, अंश  घनिष्ठ: = अत्यन्त दरो वा बलियो
खण्डवृष्टि: = सबैतिर नपरी ठाउँ-ठाउँमा मात्र पानी पर्नु
घर्षणम् = रगेड्ने वा घोट्ने काम  कृष्णम् = कालो
खण्डीकरणम् = खण्ड-खण्ड पार्नु, टुक्र्याउनु
घाताङ्क: = गुणन गर्दा निस्केको सङ्ख्या, गुणनफल
खट्वा = खाट  घृतम् = घिउ

गजः = हात्ती चञ्चलः = चकचके
गणः = समूह, जमात चञ्चलता = चकचकेपन
गणतन्त्रम् = निर्वाचित जनप्रतिनिधिहरूबाट शासन चलाउने राजनीतिक व्यवस्था
चतुरः = चलाख चतुरता = चलाखी बठ्याइँ
गणितीयम् = गणितको, गणितसम्बन्धी चन्द्रकला = चन्द्रमाको कला
गतिः = हिँडाइ, वेग, चाल चरणः = गोडा
गलः = गलो, घाँटी चलराशिः = शून्यदेखि अनन्तसम्म जति पनि मान हुन सक्ने राशि x, y, z य व र आदि
गलगण्डम् = गलाको गाँड चालकः = चलाउने वा हाँक्ने ड्राइभर
गवाक्षः = झ्याल चिकित्सा = उपचार
गिरिः = पहाड चिबुकम् = चिउँडो
गिरीशः = पहाडको राजा (हिमालय वा शङ्कर) चेतना = होस
चोलकः = चोलो छायाङ्कनम् = वस्तुको रूप वा आकार उतार्ने काम, फोटो खिच्ने काम
तिलः = सानो गेडा हुने एक अन्न जगत् = संसार
जगदीशः, जगदीश्वरः = जगत्का मालिक, ईश्वर तुषारः = तुसारो
जङ्घा = जाँघ तीर्थम् = मन्दिर, घाट आदि पवित्र स्थान
जनकः = बाबु/प्राचीन मिथिला क्षेत्रका एक राजा, जसको नाउँबाट जनकपुर प्रसिद्ध भयो
तैलम् = तेल दधि = दही
दीपः = बत्ती दीप्तम् = बलेको/ चम्केको
जनगणना = मानिसको गन्ती दीर्घः = लामो/उच्चारणमा धेरै समय लाग्ने स्वर
जनता = मानिसहरूको समूह दुग्धम् = दूध
जन-शक्तिः = जनताको क्षमता वा शक्ति दुर्बलः = दुब्लो
जनसङ्ख्या = जनताको सङ्ख्या देवरः = देवर

जन्मभूमिः = जन्मेको ठाउँ वा देश
देशान्तरम् = विदेश, परदेश/ उत्तरी ध्रुवदेखि दक्षिणी ध्रुवसम्म तानिएको मध्यरेखादेखि पूर्व वा पश्चिमको दूरी वा अन्तर
जलचरः = पानीमा बस्ने जनावर दैनिकम् = दिन-दिनको
जलमण्डलम् = पृथ्वीभरिको पानीको भाग द्वारम् = ढोका
जलवाष्पम् = पानी बन्ने बाफ धर्मशास्त्रम् = धर्मसम्बन्धी विवेचना गर्ने शास्त्र
जलीयम् = पानीबाट बन्ने, जलसम्बन्धी धान्यम् = धान
जीरकः, जीरकम् = जिरा धूपः = धूप
जीविकोपार्जनम् = जीविका चलाउन गरिने काम वा कमाइ
तडागः = तलाउ धौतम् = धोती
तपस्या = साधना, उपासना, तप ध्वंसः = नाश
तर्कशास्त्रम् = तर्कसम्बन्धी नियमको विवेचना गरिएको शास्त्र
ध्वजः = ध्वजा, झन्डा तर्जनी = चोर औँला
ध्वनिः = शब्द, आवाज/ध्वनिलाई आत्मा मान्ने साहित्यिक मान्यता
ताम्रपत्रम् = अक्षर कुँदिएको तामाको पातो
तालिका = विषय, मिति आदि मिलाई तयार गरिएको सूची, रुटिन
नखः = नङ परमाणुः = अति सूक्ष्म कण वा तत्त्व
नमस्कारः = अभिवादन, नमस्कार परलोकः = अर्को लोक, स्वर्ग
नवीनम् = नयाँ परश्वः = पर्सि
नारी = स्त्री, आइमाई परारि = परार
नासिका = नाक परावर्तनम् = फर्कने वा फर्काउने काम/साटफेर/ऐनामा परेको प्रकाश फर्कने क्रिया
निःशुल्कम् = विना शुल्क/शुल्क नलाग्ने परिचयः = चिनारी
निकुञ्जः, निकुञ्जम् = लहरा,-बुटाहरूको झाङ भएको ठाउँ
परिमितिः = परिमाण, नाप निगमः = वेद/संस्थान
परिभाषा = ठोस चिनारी, लक्षण निरन्तरम् = लगातार

परिचारक: = सेवक, नोकर निमन्त्रणम्, निमन्त्रणा = निम्ता
परिचारिका = सेविका, नोकर्नी निरर्थकम् = बेकारको, व्यर्थ
परिवार: = जहान निर्वासनम् = देशनिकाला
परियोजना = कार्य सम्पन्न गर्न बनाइएको योजना, प्रोजेक्ट
निर्यातम् = निकासी, निकासी गरिएको पवित्रम् = चोखो
निर्मलम् = सफा पश्चात् = पछि
निष्कासनम् = निकाल्नु पशुपालनम् = जनावर पाल्ने काम वा व्यवसाय
निष्कासितम् = निकालिएको पाकशिक्षा = पकाउन सिकाउने विद्या, पाकशास्त्र
निवेदनपत्रम् = निवेदन गरी लेखिएको पत्र पाठ-योजना = पाठको योजना
नि:सहाय: = सहायता गर्ने कोही नभएको पारदर्शकम् = छर्लङ्ग देखिने
नीचै: = तल पालनम्, पालना = रक्षा
नूतनम् = नयाँ पाक्षिकम् = पक्षको
नैवेद्यम् = पूजाको प्रसाद पित्तलम् = पितल
न्यायालय: = अदालत पीतम् = पहेंलो
पक्वम् = पाकेको पुरुष: = लोग्नेमान्छे, पुरुष
पदार्थ: = पदको अर्थ/देख्न, बुझ्न सकिने रूप, आकार भएको वस्तु
पञ्चमी = पाचौं तिथि पुस्तकालय: = पुस्तक सङ्कलन गरी राख्ने घर वा ठाउँ
परन्तु = तर पूग: = सुपारी
परम्परा = नियमित सिलसिला, क्रम, प्रणाली
पूर्वाधार: = योजना वा काम थाल्नुभन्दा पहिले चाहिने मुख्य आधार
पूर्णिमा = पूर्णचन्द्र हुने तिथि
भौतिकम् = पाँच महाभूत अर्थात् पृथ्वी, जल, तेज, वायु र आकाश यी ५ तत्त्वबाट बनेको वा त्यससँग सम्बन्धित
पृथक् = भिन्नै, अलग भ्राता = दाजु वा भाइ
बधिर: = बहिरो भ्रूणम् = पेटको बच्चा, गर्भ
बन्धु: = नातेदार मक्षिका = झिँगा

बहि: = बाहिर	मञ्च: = मेच
बहिष्कृतम् = बहिष्कार गरिएको	मध्यमा = माझीऔंला
बहुभुज: = चारभन्दा बढी रेखाले घेरिएको समतलीय चित्र
बहुमूल्यम् = धेरै मोल पर्ने	मन:स्थिति: = मनको अवस्था
बाध्यता = लाचारी, विवशता	मयूर: = मुजुर
बाह्यम् = बाहिरको	मशक: = मच्छड, लामखुट्टे
ब्रह्माण्डम् = पृथ्वी, आकाश आदि सम्पूर्णले युक्त संसार
भक्तम् = भात	मर्यादा = सीमा हद/आचरण, नियम
भक्त: = भक्ति गर्ने व्यक्ति	महत्तम: = सबभन्दा ठूलो
भक्ति: = ईश्वर वा मान्यजन प्रतिको आस्था, सेवा
महाप्रबन्धक: = संस्थानको प्रबन्ध मिलाउने मुख्य व्यक्ति जनरल म्यानेजर
भग्नावशेष: = भत्की बिग्री बाँकी रहेको अंश
मत्स्यपालनम् = माछा पाल्ने काम वा व्यवसाय
भयभीत: = डरले पीडित	मांसम् = मासु
भागिनेय: = भानिज	मानाङ्क: = मानदेवले चलाएको टक वा मुद्रा
भाण्डम् = भाँडो	मान्यता = संमान/स्वीकृति
भानूदय: = सूर्यको उदय	मुद्रक: = छाप्ने, मुद्रण गर्ने
भावना = विचार, कल्पना	मुद्रणम् = छपाइ
भूकम्प: = भुइँचालो	मूलम् = जरो
भूतलम् = पृथ्वी, धरातल	मेधावी = प्रतिभाशाली
भूपति: = राजा	मौलिकम् = मूलसँग सम्बन्धित अरुको आड नलिई आफैंमा अडिएको
भूपरिवेष्टितम् = जमीनले घेरिएको	यव: = जौ
भूमि: = जमीन	भूक्षय: = भूमिको क्षय हुनु, पहिरो जानु
यापनम् = बिताउनु	लघुतम: = सबभन्दा सानो
युक्ति: = उपाय, जुक्ति	लक्षणम् = चिन्ह, लक्षण

योजना = बन्दोबस्त, तयारी    लवणम् = नून
योजनाबद्धम् = योजनामा आधारित    लेखनी = कलम
यौगिकम् = दुई वा दुई भन्दा बढी मिलेर बनेको    लौहम् = फलाम
रक्तम् = रगत/रातो (रङ)    वंश: = कुल
रक्तस्राव: = रोग वा चोटपटकले शरीरबाट रगत बग्नु
वंशानुगतम् = वंशपरम्परादेखि आएको, पुर्ख्यौली
रचना = बनाउने काम, निर्माण    वञ्चक: = ठग, धूर्त
रजक: = धोबी    वधू: = दुलही
रजतम् = चाँदी    वर: = दुलाहा
रसना = जिब्रो    वर्णनम् = बयान
रसायनम् = धातु गालेर भस्म पार्ने वा एक धातुबाट अर्कोमा परिणत गर्ने विज्ञान
राजनीति: = राज्यको शासनप्रणाली वा नीति    वर्णनात्मकम् = वर्णन भएको
राजनीतिज्ञ: = राजनीतिमा सिपालु    वायु: = हावा, बतास
राजमार्ग: = मूल सडक    वायुमण्डलम् = आकाश/वातावरण
राज्याभिषेक: = नयाँ राजा गद्दीमा बस्दा गरिने अभिषेक
वाष्पीकरणम् = तरल पदार्थलाई बाफमा परिणत गर्ने काम
रात्रि:, रात्री = राती    वार्षिकम् = वर्ष दिनको
राष्ट्रम् = राष्ट्र, राज्य    विकृति: = विकार
राष्ट्रियम् = राष्ट्रको    विजय: = जित
रूपान्तरम् = अर्को रूप/ एक रूपबाट अर्कोमा लैजाने काम, अनुवाद
रोग: = रोग, बिमारी
विद्युत् = बिजुली    विनाश: = बिगार, बरबादी
विकेन्द्रीकरणम् = स्थानीय तहसम्म अधिकार पुऱ्याउने काम
विरक्त: = संसारबाट मोह टुटेको
विजातीयम् = अर्कै जातको, फरक वर्गको
विनिमय: = अदलाबदली, हेरफेर    श्व: = भोलि

विश्व: = संसार/सम्पूर्ण श्वास: = सास
विश्वयुद्धम् = संसारका धेरै मुलुकको संलग्नतामा हुने लडाइँ श्वेतम् = सेतो
विषुवत्रेखा = उत्तरी र दक्षिणी ध्रुवका बीचमा पूर्वबाट पश्चिम गएको भनी कल्पना गरिएको रेखा, विषुवत्रेखा
वृद्धि: = बढ्नु/व्याकरणमा आ-ऐ-ओ यी तीन अक्षर षड्यन्त्रम् = जालझेल
व्यक्तित्वम् = व्यक्तिको गुण वा विशेषता
संस्कार: = सुधार/१६ वटा धार्मिक संस्कार
व्यञ्जनम् = तरकारी, अचार आदिको परिकार संस्कृति: = परम्परा, रीतिरिवाज
व्यतीतम् = बितेको संस्था = संगठित समुदाय वा निकाय
व्यवहार: = चालचलन (प्रयोग) काम सङ्कलनम् = सँगालो
शङ्ख: = शङ्ख सङ्ग्रहालय: = महत्त्वपूर्ण वस्तु संग्रह गरी राखिने ठाउँ वा घर
शयनम् = ओछ्यान/सुताइ सङ्घ: = समूह
शाखा = हाँगो सङ्घर्ष: = टक्कर, विद्रोह, प्रतिस्पर्धा
शाटिका, शाटी = सारी सञ्चार: = हिंडाइ, गति/ खबर, सूचना ओसारपसार
शाब्दिकम् = शब्दको, शब्दसम्बन्धी/मौखिक
सजातीय: = एकै जातको, एकै वर्गको
शिखरम् = चुचुरो सदा, सर्वदा = सधैं
शिष्य: = चेलो सद्भावना = असल भवना
शिलापत्रम्, शिलालेख: = शिला (ढुंगा) मा कुँदिएको अक्षर वा लेखोट
शुक: = सुगा सन्ध्या = साँझ
शुभ-कामना = भलो चाहना समकोण: = रेखागणितमा ९० अंशको कोण
शृङ्खला = साङ्लो/लहर समानता = बराबरी
समानुपात: = एकनासको औसत
समीकरणम् = ज्ञात राशिका सहायताले अज्ञात राशि निकाल्ने गणितको प्रक्रिया
समीपम् = नजिक समुदाय: = समूह
सम्पत्ति: = धन-दौलत सम्पादक: = किताब, पत्रपत्रिकाका लेख सम्पादन गर्ने व्यक्ति

साङ्केतिकम् = संकेत प्रयोग गरिएको, संकेतात्मक साधनम् = औजार, उपकरण
साप्ताहिकम् = सप्ताहको, सातदिने सामन्तः = रजौटे
सामर्थ्यम् = क्षमता, शक्ति सिन्दूरम् = सिंदुर
सुचालकम् = विद्युत् तरङ्ग प्रवाहित नहुने
सुन्दरम् = राम्रो, तापमात्र सर्ने अभ्रक आदिवस्त' सुवर्णम् = सुन
सूक्ष्मम् = मसिनो, गुप्त सेना = पल्टन, फौज
स्तनः = थुन स्तुतिः = प्रार्थना, स्तुति
स्थलम् = भुइँ, जमिन, ठाउँ स्थलमार्गः = जमिनको बाटो, भूमार्ग
स्थलमण्डलम् = पृथ्वीको संपूर्ण खंदिलो भूभाग स्थलीयम् = स्थलसम्बन्धी, स्थलको
स्थितिः = अवस्था/बसाइ स्वाभिमानः = आफ्नो प्रतिष्ठामा हुने अभिमान वा गौरव
हरितम् = हरियो हीरकम् = हीरा
ह्रस्वः = छोटो/थोरै समयमा उच्चरण गरिने स्वर क्षतिः = नाश, खती
त्रिकोणः = तीन सरलरेखाबाट बनेको समतल चित्र, त्रिभुज त्रिभुजः = त्रिकोण

